# भागवतरहस्यम्

पण्डितश्रीशुकदेवत्रिपाठी
प्राध्यापकः,
वाराणसेयश्रीचन्द्रसंस्कृतमहाविद्यालयस्य,
शिवाला, वाराणसी

( सारस्वत्याः सुषमायाः ४३ व० ३–४ अ० प्रतिमुद्रणम् )
मार्गशीर्ष-फाल्गुनपूर्णिमे, वि० सं० २०४५




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी-२२१ ००२ ( उ० प्र० )

# भागवतरहस्यम्

पण्डितश्रीशुकदेवत्रिपाठी
प्राध्यापकः,
वाराणसेयश्रीचन्द्रसंस्कृतमहाविद्यालयस्य,
शिवाला, वाराणसी

❁ ❁ ❁

शुकमुखाभिव्यक्तं कल्पतरोरमृतं सरसं फलम् आमोक्षं भुवि रसिकजनपेयमेव ।

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः[1] ॥

पद्मोत्तरखण्डे भागवतमाहात्म्यवर्णनायामुक्तम्—

वृक्षस्यामूलात् शाखाग्रभागपर्यन्तं सर्वत्र प्रवहमानो नैवास्वाद्यः; किन्तु स एव रसः पृथगाकारफलरूपपरिणतो विश्वाखिलजनास्वाद्यो भवति वेदोपनिषदादिसारात्मिका भागवतकथापि पृथग्रूपेण फलाकारपरिणताऽप्युत्तमा सकलजनग्राह्या च[2] ।

वेदोपनिषत्सुरभिनिष्णातभागवते भारतीयधर्मस्य संस्कृतेश्च परमा सिद्धिः फलरूपेण सञ्जातेत्यत्र नास्ति विवादावसरः । धर्मदर्शनयोः काव्येतिहासयोः दक्षिणोत्तरवाहिनी चाद्भुतधारा, धारा प्राणरसा । ततस्तमसः परम्पारस्यादित्यवर्णस्य पुरुषस्य सन्धाने प्रेमघनश्यामलसुन्दरप्रकाशेन सह विरहमिलनलीलानित्यतरङ्गभङ्गे भक्तिज्ञानवैराग्यविचित्रमार्गानुधावने इयं कथा पदेपदे परमास्वाद्या[3] ।

भागवतपाठे प्रवृत्तिश्च जयदेवभणितिभङ्गिमैव—

यदि हरिस्मरणे सरसं मनो यदि कलासु विलासु कुतूहलम् ।
तदा मृदुलकोमलकान्तपदान्वितां भागवतीं वाचं शृणुत ॥

द्वादशस्कन्धे द्वात्रिंशदुत्तरत्रिंशताध्यायात्मकेऽष्टादशसहस्रश्लोकनिबद्धे भागवते किमपि कमनीयमनिर्वचनीयं महत्त्वम्, यद्वशादस्य भारतीयभक्तिशास्त्रे संहितायाञ्चानन्यसाधारणं स्थानम् । कलौ कृष्णप्रतिनिधिभूतस्य पुराणार्कस्य भागवतस्य वचसाऽगम्यमेव वैशिष्ट्यं साक्षाद्धरेः शब्दमयी मूर्त्तिरेव ।

---

१. भा० १।१।३; २. प० पु० उ० ख० भा० मा० २।६७–६८; ३. भा० १।१।१९।

तेनेयं वाङ्मयी मूर्त्तिः प्रत्यक्षा वर्तते हरेः[१]।

किमन्यत् श्रीकृष्णस्य परमपुरुषस्याङ्गात्मिका अवतारणैव द्वादशस्कन्धात्मिका भागवती कथा[२]।

भागवतं ब्रह्मसम्मितं महापुराणम्[३]।

भारतीयसंस्कृतौ पुराणेतिहासयोः पञ्चमवेदनाम्ना प्रसिद्धिः।

"इतिहासपुराणञ्च पञ्चमो वेद उच्यते।" ( भा० १।४।२० )

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति[४]॥

पञ्चमवेदस्यावतारो हि अल्पज्ञानां हितकामनयैव वेदार्थपरिबृंहणेन तज्ज्ञानसम्पादनार्थम् ।

पञ्चमवेदरूपेण अथर्ववेदे शतपथब्राह्मणे च लिखितं यत् पुराणम् इतिहासस्यापि मर्यादामावहति । अध्यात्मवाददिग्दर्शने वंशानुचरितसंवलितेतिहासप्रणयनेऽपि पुराणस्यानन्यसाधारणभूमिका विसंवादितैव । पुराणस्य च प्रथमो निर्देशोऽथर्ववेदे दृश्यते, परमनेकेषां सुदृढो निश्चयो यद् वेदात्प्राचीनतरं पुराणम् । ऋग्वेदस्थो वध्र्यश्व-दिवोदास-सुदास-सोमकप्रमुखो नृपतिवर्गः वंशानुचरिते बहुपरवर्ती राजवर्गेषु उल्लिखितः। पुराणाख्यानभाष्येण वेदोपनिषदो दुर्बोधरूपकोपमादीनां ग्रन्थिमोचनं जायते। अतः कस्य प्राचीनत्वमिति संशयापन्नम्। एतत्त्ववितथं वचो यत् पुराणानां परिवर्धनं परिबृंहणं नवसंस्करणं च काले सञ्जातमेव । प्रागृग्वेदीययुगस्थस्यापि राज्ञः चर्चा पुराणे वर्तत एव। स्कन्दपुराणेनावधार्यते यत् शतकोटिश्लोकपरिमितं ब्रह्माण्ड-पुराणाख्यमेकमेवासीत्—

"एकमेव पुरा ह्यासीद् ब्रह्माण्डं शतकोटिधा।
ततोऽष्टादशधा कृत्वा वेदव्यासो युगे युगे॥

मत्स्यपुराणेऽप्युक्तम्—

पुराणमेकमेवासीत् तदा कल्पान्तरेऽनघ[६]।

पार्जिटरमहोदयेनाप्येतत्स्वीकृतम् ।

अष्टादशपुराणसंख्यायां मतभेदो नास्ति; किन्तु पुराणतालिकायां कस्यान्तर्भावः कस्य नेत्यत्र विवादः सुप्रसिद्धः। शाक्तसम्प्रदायः श्रीमद्भागवतं परित्यज्य महाभाग-

---

१. प० पु० ३।६२;
२. द्रष्टव्यो भक्तनाभाजीप्रणीतः 'भक्तमालग्रन्थः'।
३. भा० १।३।४०, १२।७।१०।४;
४. महाभा० आदिपर्व—१।२५।
५. प्रभासक्षेत्रमाहात्म्यम् २।८–९;
६. मत्स्यपु० ५३।४।

वतस्य कालिकापुराणस्य वाऽष्टादशान्तर्गतत्वं स्वीकुर्वते। भागवतस्य प्राचीनतममैतिह्यं विपुलप्रसिद्धिञ्चाभिलक्ष्य अष्टादशपुराणप्रच्युतिं नेच्छन्ति। विष्णुपुराणतालिकायां श्रीमद्भागवतस्य निर्देशः, स्थानञ्च पञ्चमम्। भागवतेऽपि भागवतस्य महापुराणत्वेन उल्लेखः। ब्रह्मवैवर्तेऽपि तथैव।

अमरसिंहः पुराणस्य पञ्चलक्षणं प्रदर्शितवान्—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्॥

तथा हि—सर्गः = सृष्टिः, प्रतिसर्गः = प्रलयः, पुनः सृष्टिश्च, मन्वन्तरं = मन्वधिकृतयुगविभागः, वंशः = देववंशव्याख्यानम्, वंशानुचरितम् = ऋषेः, राजवंशस्य च विवरणम्।

भागवते एतत्पञ्चलक्षणपरिवर्तने दशलक्षणोल्लेखो विद्यते—

तस्मा इदं भागवतं पुराणं दशलक्षणम्। (२।९।४४)
अत्र सर्गो विसर्गश्च स्थानं षोषणभूतयः।
मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः॥ (२।१०।१)

अस्मिन् लक्षणे स्थानशब्देन सृष्टानां पदार्थानां शृङ्खलारक्षणम्, पोषणशब्देन भगवदनुग्रहः, अतिशब्देन जीवानां वासना कर्मसंस्कारो वा, ईशानुकथाशब्देन ईश्वरावतारः, भक्तजनस्य चरित्राणि, निरोधशब्देन जीवस्य भगवति अन्तर्धानम्, मुक्तिशब्देन जीवस्य कर्तृत्वस्य भोक्तृत्वस्य च त्यागः, आश्रयशब्देन सर्वजीवस्य गतिर्भर्ता निवासः साक्षी परमेश्वरः। एतेषां प्रदर्शितानां महापुराणलक्षणानां भागवते समन्वयो भवति। तथा हि—

मूलभागवतस्य सूत्रपातो द्वितीयस्कन्धस्य प्रथमेऽध्याये अन्येषाञ्च द्वादशस्कन्धस्य षष्ठाध्याये प्रथमस्कन्धः द्वादशस्कन्धस्यावशिष्टोऽध्यायः, उपक्रमणिकोपसंहारश्चेति यथाक्रमम्।

नैमिषारण्ये समवेतानामृषीणामनुरोधेनैव सूतपाठकः कथामवतारयति। कथोपकथनस्यायं प्रकारो विशिष्टः, स च बहुधा अनुसृतः। विदुरोद्धवसंवादः, मैत्रेयविदुरसंवादः, भगवदुद्धवसंवादप्रभृतयः—इमे एव प्रमाणपदवीमावहन्ति। मध्ये-मध्ये मनोज्ञा रुद्रगीता उद्धवगीता चेति; परन्तु भागवतस्य मूलवक्ता न सूतपाठकोऽपि तु व्यासपुत्रः शुकदेव एव। गङ्गातटे परीक्षित उपविष्टः सन् शुकमुखादमृतसंयुक्तां कथामश्रृणोत।

एतदेव मूलभागवतकथा। शुकतालक्षेत्र एव श्राविेतेयं कथेति प्रसिद्धिः।

द्वितीयस्कन्धस्य चतुर्थाध्याये "नमः परस्मै पुरुषाय भूयसे" इत्येव कथावस्तुमङ्गलाचरणमिति। कथायाः समाप्तिश्च द्वादशस्कन्धस्य पञ्चमाध्याये शुकदेवसमावर्तन-

समारोहश्च तदव्यवहितानन्तरं षष्ठाध्यायेऽष्टमश्लोके । महापौराणिकदशलक्षणस्य समन्वयः शुकदेवकथायामेव जायते। सर्गः सृष्टिवर्णना वा द्वितीयस्कन्धस्य पञ्चमाध्याये, तृतीयस्कन्धस्य दशमाध्याये द्वादशे च। प्रलयः प्रलयानन्तरं सृष्टिवर्णना विसर्गश्च तृतीयस्कन्धस्य एकादशाध्याये परमात्मनः कालाख्यप्रतिष्ठावर्णनायाम्। स्थानम् =सृष्टवस्तुनः शृङ्खलारक्षा तृतीयस्कन्धस्य विंशाध्याये। एवमेव प्रसङ्गतः पञ्चमस्कन्धस्य षोडशाध्याये भूगोलवर्णना, ऊनविंशाध्याये भारतवर्षस्य श्रेष्ठत्वघोषणा, एकविंशे खगोलविवरणम्, अथवा षड्विंशे नरकोन्मोचनम्। "पोषणं" भगवदनुग्रहस्तु समस्तभागवते निरन्तरं वर्णितः, परं अजामिलं प्रति, गजेन्द्रं प्रति चासीमकृपा चोल्लेखयोग्यैव। इमे कथे यथाक्रमं षष्ठेऽष्टमे च स्कन्धे। "ऊतिः" जीवस्य वासना कर्मसंस्कारश्च, "निरोधः" ऊतिक्षये जीवस्य भगवति अन्तर्धानम्, मुक्तिश्च तृतीयस्कन्धे कपिलभाष्ये, चतुर्थस्कन्धे सनत्कुमारभाष्ये, भगवदुद्धवसंवादे विस्तृतभावेनालोचितम्। शुकदेवोऽपि भागवतस्य उपक्रमे द्वितीयस्कन्धस्य द्वितीयाध्याये सम्यगालोचयत्। 'मन्वन्तरं' मनोरधिकृतकालादिविभागे भागवतचरित्ररक्षामकरोत्। चतुर्थस्कन्धे स्वायम्भुवमनुवर्णनायामेवैतस्य सूत्रपातो वर्तते। अष्टमे मन्वन्तरानुवर्णनायां तच्छुभसमाप्तिः।

अस्मिन् प्रसङ्गे स्वायम्भुवस्य, स्वारोचिषस्य, उत्तमस्य, तामसस्य, रैवतस्य, विवस्वतः, शुकदेवकालवर्तिनः श्राद्धदेवस्य[1], सावर्णेः, दक्षसावर्णेः, ब्रह्मसावर्णेः, धर्मसावर्णेः, रुद्रसावर्णेः, देवसावर्णेः, इन्द्रसावर्णेः, एतेषां चतुर्दशमनूनां शासनकालः, वंशविस्तारश्च वर्णितो विद्यते। एतेषां काले कया मूर्त्या भगवत आविर्भावः? कश्च इन्द्रः? के च सप्तर्षयः? सर्वं सम्यगालोचितम्। चतुर्थस्य तामसमनोः समये हरिमेधस औरसे हरिणीगर्भे आविर्भूतो हरिरिति। भागवतदृष्ट्या स एव कुम्भीरग्रासाद् गजेन्द्रस्य रक्षां चकार[2]। अस्मिन् समये त्रिशिखनामा इन्द्रः, ज्योतिर्धामप्रभृतयः सप्तर्षय आसन्। पञ्चममनो रैवतसमये विकुण्ठासुताः "वैकुण्ठ"-नाम्ना भगवतः स्वकलया आविर्भाविताः, तदा विभुरिन्द्रः, हिरण्यरोमा-वेदशिराप्रमुखाः सप्तर्षय आसन्। अस्मिन् मन्वन्तर एव ऋषिवंशादिविस्तारो वर्णितः। 'ईशानुकथा' ईश्वरावतारः, ईश्वरानुगृहीतभक्तजनकथा एव भागवते प्राधान्येन वर्तन्ते। अवतारेषु मत्स्यावतारः अष्टमस्कन्धस्य चतुर्विंशाध्याये, कूर्मावतारोऽष्टमस्कन्धस्य दशमाध्याये, वाराहरूपस्तृतीयस्कन्धस्य त्रयोदशाध्याये, नृसिंहावतारः सप्तमस्कन्धस्याष्टमाध्याये, वामनावतारोऽष्टमस्कन्धस्य पञ्चदशाऽध्याये परशुरामावतारः, रामावतारश्च नवमस्कन्धस्य पञ्चदशाध्याये, दशमे चाध्याये, दशमस्कन्धे बलरामावतारः, बुद्धः, कल्किश्च नाम्ना निर्दिष्टाः।

एतद्दशावतारातिरिक्तानां भगवतो नानावताराणां वर्णना विद्यते। पृथोरवतारस्य वर्णना चतुर्थस्कन्धे, ऋषभावतारः चतुर्थे षष्ठे चाध्याये, नरनारायणावतारः

१. सप्तमो वर्तमानो ( ८।१३।१ )।　　२. भा० ८।१।३० ।

एकादशस्य चतुर्थे। कपिलावतारप्रसङ्गः तृतीयस्कन्धस्य चतुर्विंशाध्यायात् त्रयस्त्रिंशाध्यायपर्यन्तं विस्तृतं वर्णित अत्रैव वैदिकसांख्यसिद्धान्तोऽपि वर्णितः। अवतारस्वरूपवर्णनायामीश्वरानुगृहीतभक्तजनचरित्रवर्णनमपि गुरुत्वाधायकमेव। तत्र चतुर्थस्कन्धस्याष्टमाध्याये ध्रुवचरितम्, सप्तमस्कन्धस्य चतुर्थाध्याये प्रह्लादचरितम्, नवमस्कन्धस्य चतुर्थाध्याये अम्बरीषचरितम्, एकविंशेऽध्याये रन्तिदेवचरित्रकीर्तनम्। भक्तवृन्दानां वर्णनक्रमेणाराध्यभगवतो वर्णनेन दशमलक्षणस्याश्रयस्यैव जयज्ञानं विद्यते।

श्रीधरस्वामिदिशा भगवान् कृष्णो भागवतदशमलक्षणस्थानीयः, आश्रयो वा? दशमस्कन्धस्य नवतिसंख्याकाध्यायेषु विस्तृतं नरशरीरधारकस्याश्रयस्थानीयस्य अनन्यसाधारणस्य श्रीकृष्णस्य वर्णनम्।

भागवतस्य द्वादशस्कन्धे भिन्ननाम्ना एतेषां दशलक्षणानामुल्लेखो विद्यते। तथा हि—

सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च।
वंशो वंशानुचरितं संस्थाहेतुरपाश्रयः॥ (१२।७।९)

वृत्तिः = भक्तजनकर्त्तव्यम्, रक्षा = भगवत्कर्तृकतद्रक्षणम्, स्थानस्य पोषणस्य चापरं नाम। निरोध एव संस्था, ऊतिः, वासना वा पुनर्जन्मनः कारणं हेतुर्वा आश्रय एवापाश्रय इति।

दशलक्षणसमन्वयवशादेवाधुनिका अर्वाचीनं पुराणं श्रीमद्भागवतमिति कथयन्ति।

अस्मिन् प्रसङ्गे महामहोपाध्यायहरप्रसादशास्त्रिणोक्तं यद् अमरकोषकार आसीद् बौद्धः। तन्मते हिन्दुपुराणं कतिपयप्राचीनकथानाम् इतिहासमात्रमेव। भागवतस्य दशलक्षणमध्य एव प्रथमः प्रतिवादो विद्यते। दशलक्षणान्तर्गतवृत्त्या रक्षया च पुराणस्य धर्मीयमर्यादैव रक्षिता[१]। भागवतस्य रचना च महाभारतकालानन्तरमेव[२]।

"महदद्भुतम्" तथा 'सर्वार्थपरिबृंहितम्' इति कथनेन महाभारतानन्तरं भागवतस्य प्रकाशनेऽपि महाभारतस्य महदद्भुतसर्वार्थपरिबृंहितस्वभावः स्यात्रापि समन्वयः। महाभारतस्य रचनानन्तरमपि वेदव्यासस्य परितृप्तिर्न जातेति तस्या एव सार्थकतात्र विद्यते। सार्थकत्वप्राप्तिप्रसङ्गे महाभारतात् किमपि वैशिष्ट्यमेवात्रेङ्गितम्। सा च सार्थकता वेदगुह्या अहैतुकी प्रेमभक्तिरेव। "यद्धि भारते नास्ति तद्भारतेऽपि

---

१. **A descriptive catalogue of Sanskrit manuscripts in the collection of the Asiatic Society of Bengal, Vol. V. preface, P. exxvii**

२. भा० १।४।३-४, १।५।३।

नास्ति" महाभारतप्रसङ्गे एतादृशी उक्तिः प्रवादरूपैव। वस्तुतो महाभारते धर्मार्थकाम-मोक्षाणां. प्राप्तिप्रकारेण सहैव इतिहासस्य, भूतत्त्वस्य, ज्योतिर्विज्ञानस्य, अन्यासां च विद्यानां शाखोपशाखानामालोचना वर्तते।

तथा च परापरायाः पर्यालोचने भागवतमपि तथैव। प्रेमभक्तेः परमपुरुषार्थत्वं नूनमेव निरूपयति श्रीमद्भागवतम्, तथापि धर्मार्थकाममोक्षाणां साङ्गोपाङ्गविश्लेषण-मेतस्य परमं वैशिष्ट्यम्। विश्वविज्ञानम्, भूपरिचयः, भारतीयेतिहासः परिबृंहितो भागवते। विश्वसृष्टिरहस्यविवेचनायां क्रमशो भागवते आधुनिकविज्ञानानुरूपा परमा-णावेव विश्रान्तिरिति परमाधुनिकतमविज्ञानधारेव भागवते। तत्रैव परमा विश्रान्तिर्नैव जाता परमाणावेव सत्यत्वन्नावधारितम्, विश्लेषणन्तु उपमितसिद्धान्तानुरूपं ज्योतिषि अर्थात् सूक्ष्मतमात्मज्योतिषि विश्रान्ति लभते। भक्तिशास्त्रे उक्तमेव विशुद्धसत्त्वम्, अर्थाद् वासुदेवः[1]। विज्ञानस्यापि दीप्तावेवागमनम्। विज्ञानस्य पन्थाः परीक्षणनिरीक्षण-मूलको गाणितिकः, भागवतादिशास्त्रस्य सिद्धान्तस्य पन्थाः बोधिः। यदि मार्गद्वयं कुत्राप्येकत्र विश्रान्ति लभते, तदा भारतीयैतिह्योत्तराधिकारिणां कृते आनन्दस्य विषयः। कोपरनिकासग्यालिलिमहाशयस्य न्यूटनमहोदयस्य च सिद्धान्ताविर्भावात्पूर्वमेव भारतवर्षे आह्निक-वार्षिकगतिः, अभिकर्षमहाकर्षसूत्रस्याविष्कारः, द्वादशशतके भास्कराचार्येण ततोऽपि पूर्वं ज्योतिर्विदार्यभट्टेन ग्रहविषयकगतिसूत्रस्याविष्कारः ख्रीष्टपूर्वपञ्चमशतक एव जातः, अयमेव प्रायः पुराणकालोऽपि। तथा च भारतीय-खगोलविवरणे प्राचीनभारतवर्षीयविज्ञानभाण्डारस्य आचार्यास्तत्परा एवासन्।

भागवतेऽपि सूर्यं परिव्याप्य ग्रहाणां गतिः, न केवलं ग्रहाणाम्; अपि तु सूर्यस्यापि गतिरस्ति, कुम्भकारस्य चक्रेण सह सूर्यादीनां नक्षत्राणां तुलनां विधाय यदा चक्रं भ्रमति, तदा तदुपरिस्थिता पिपीलिका एकं स्थानं परित्यज्य विपरीतगतिं कुरुते, तदा तस्या अपि विपरीता गतिरपि स्वीकरणीयैवैवमेव सूर्यादिनक्षत्राणामपि उभयविधगतिः स्वीकार्या[2]। भागवतमते पञ्चविंशतितत्त्वेषु अन्यतमो महाप्रभावशाली काल एव ग्रह-नक्षत्रादिकं परिचालयति निरन्तरम्। मेरुभूत एतेषां ध्रुव एव ध्रुवस्तम्भं परिव्याप्य प्रकृतिपुरुषसंयोगवशात् कर्मानुसारं गतिं प्राप्याकाशे भ्रमति, न भूतले कदापि संपतति[3]। विज्ञानविषयाणां पुराणे संग्रहेऽपि उपसंहारस्तु दार्शनिकपारमार्थिकसत्य एव जायते। ज्यातिर्विज्ञानस्य सर्वमपि कौतूहलं विस्तारयति भागवतः; किन्तु ज्योतिषचक्रेण कल्पितशिशुमारमूर्त्तिधारणायामेवार्थात् शिशुमारस्य परमपुरुषार्थरूपस्य ज्योतिःस्वरूप-शरीररूपोपासनायामेव उपसंहरति[4]।

---

१. भा० ५।१२।११;　　२. तत्रैव–५।२२।२।
३. तत्रैव–५।२३।१२;　　४. तत्रैव–५।२३।

शुद्धाकाशस्य केवलं ध्यान एव नहि अपि तु विश्वप्रकृत्या सह शुभदृष्टिक्षेत्रेऽपि भागवतस्य सैव सर्वोपरि पारमार्थिकी दृष्टिरपेक्षिता। भूमण्डलस्य स्थूलरूपचिन्तायां भागवते "कुवलयकमलकोषभाण्डारकोषो" पद्मस्वरूपत्वं वा वर्णितम्[1]। पुरा भारतवर्षमजनाभवर्षमासीत्, ततो 'जानानः' अनन्तरं ऋषभज्येष्ठपुत्रस्य भरतस्य नाम्ना भारतवर्षम्[2]।

मलयमङ्गलप्रस्थ-मैनाक - विन्ध्य-शुक्तिमान-ऋक्षगिरि - चित्रकूट-गोवर्धन-रैवतक-प्रभृतिध्यानगभीरपर्वतालङ्कृतभारतवर्षं ताम्रवर्णीकृतमाला-कावेरी-यमुना-सरस्वती-दृषद्वती-वितस्ता-आसीक्नी-विश्वान्धशोणप्रभृतिनदीनदजपमालाधृतभारतवर्षं नववर्षेषु कर्मक्षेत्रभूमिः, अन्येषां तु स्वर्गभागावशिष्टं पुण्यक्षेत्रत्वमर्थात् पार्थिवस्वर्गभूमिः। भवतु नाम तेषां स्वर्गभूमित्वम्; किन्तु देवगणा नित्यस्वर्गभूमिं तुच्छं स्वीकुर्वन्ति। ब्रह्म-विष्णुपुराणादिवदत्रापि भारतमहिमा वर्णितः—

"अहो अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकी स्पृहा हि नः॥ ( भा० ५।१९।२० )

चिरजीविनो देवा अपि स्वर्गं परित्यज्याल्पमायुः समासाद्य भारते जन्म श्रेष्ठमिति कामयन्ते—

कल्पायुषां स्थानजयात्पुनर्भवात्
क्षणायुषां भारतभूजयो वरः।
क्षणेन मर्त्येन कृतं मनस्विनः
संन्यस्य संयान्त्यभयं पदं हरेः॥ ( भा० ५।१९।२२ )

अतः परं किमधिकं भवेद् भारतीय-साहित्ये देशप्रेम—"कल्पायुषां स्थानजयात् पुनर्भवात् क्षणायुषां भारतभूजयो वरः"। पुराणैतिह्यस्यावहेलां विधायैवैष निश्चयः सुदृढः सञ्जातो यद् भारतीयानामैतिहासिकज्ञानस्य शोचनीया दशा विद्यते। पुराणाध्ययनेन एतद्भ्रान्तधारणा सर्वथाऽपहृता भवेत्।

वंशानुचरितं सर्वत्र समानमेव प्रायः, परं वैष्णवानां चरितन्तु सर्वथा पूर्णमेवात्र।

भागवतस्य रचनासमये तत्स्थानविषयेऽपि च महती विप्रतिपत्तिर्विद्यते। वैष्णवभक्तदृष्ट्या भागवतस्य पौरुषेयत्वम्। सृष्ट्यादौ पाद्मकल्पे स्वयं भगवान् हरिरेव शब्दशरीरं धृत्वा पद्मयोनिं ब्रह्माणं चतुःश्लोकात्मकं[3] भागवतं श्रावयामास। ब्रह्मा

१. भा० ५।१६; २. तत्रैव–५।४।९, ५।७।३; ३. तत्रैव–२।९।३३–३६।

नारदाय, नारदो व्यासाय, ज्ञानिदृष्ट्या एतदेव भागवतपुराणम्[1]। अनेन रूपेण भागवतस्य प्रचारः प्रसारश्च समभवत्। चतुःश्लोकात्मकं मूलम्, तदेव सद्योमुक्तिप्रदम्[2]; परन्तु नैमिषारण्यस्थमुनेरिवात्रापि प्रश्नानां बाहुल्यं विद्यत एव। कस्मिन् युगे, कस्मिन् स्थाने, केन हेतुना, कुतः सञ्चोदितः कृष्णः कृतवान् संहितामुनिः? इत्येवं प्रश्नाः गवेषकाणां नूनमेव स्युः, सन्ति च। भागवतदिशा महाभारतानन्तरं ब्रह्मनद्याः सरस्वत्यास्तटे पश्चिमे शम्पाप्रासतीर्थे व्यासस्य समाधिस्थे चित्ते स्फुरितं भागवताख्यं पुराणम्। पद्मोत्तरखण्डस्य भागवतमाहात्म्ये उक्तं यद् वेद-वेदान्तनिष्णातस्य गीतारचनानन्तरमपि शान्तिर्नैव जाता अज्ञानसमुद्रे निमग्न एवासीत्तदा नारदसकाशाद् भागवतोपदेशं जग्राह।

मत्स्यपुराणमतेऽष्टादशपुराणाविर्भावानन्तरं महाभारतं व्यरचयत् श्रीव्यासदेवः। श्रीमद्भागवतस्याष्टादशपुराणान्तर्गतत्वमित्यत्र नास्ति विमतिः।

श्रीजीवगोस्वामिना एतद्विरुद्धमतमवधार्य उक्तं यद् आदौ संक्षिप्तभागवतं प्रकाश्यानन्तरं महाभारतं सम्पूर्णं विरच्य तदनु विस्तृतं भागवतं व्यरचयत्[3]। भागवतस्य रचनाकालसम्पर्के मतत्रयं प्रचलितं विद्यतेऽनुसन्धानकर्तॄणाम्—

१. भागवतमहापुराणं प्राचीनतमम्।

२. भागवतमहापुराणम् अर्वाचीनतमम्।

३. भागवतमहापुराणं ख्रीष्टीयपञ्चमे षष्ठे वा शतके।

महामहोपाध्यायहरप्रसादशास्त्रिमते ख्रीष्टपूर्वं भागवतस्य रचना जाता। द्वितीयमतस्य परिपोषकाः Burnout wilson colebrookeमहाशयाः चतुर्दशशताब्द्यामेतस्य रचनेति स्वीकुर्वन्ति। Winternitz महाशय एकादशशताब्द्यामेतस्य रचना जातेति स्वीकरोति। Ferauhar दशमशताब्द्याः पक्षपाती, Eliot नवमदशमशताब्द्योर्मध्यकाल एतस्य रचनामङ्गीकरोति। भारतीयो वङ्किमचन्द्रोऽपि भागवतस्य प्राचीनत्वं न स्वीकरोति—"पुराणमिदमन्यपुराणापेक्षयाऽऽधुनिकम्, अन्यथा पुरातत्त्वदृष्ट्या एतावान् विवादः कथमिव स्यात्[4]"।

भण्डारकरमहाभागा आनन्दतीर्थमहोदयाद् द्विशतपूर्वमेतस्य रचनामङ्गीकुर्वन्ति, डी० एस० शास्त्रिमहोदयः ८२५–८५० ख्रीष्टाब्दौ, कृष्णमूर्तिशर्मा अष्टमशताब्द्याम्, ए० एन० रायमहाशयः षष्ठशताब्द्याम्।

चतुर्दशशताब्द्यामेतस्य रचनेति स्वीकर्तॄणां मतं तुच्छतमं यत एकादशशताब्द्याः पूर्वार्द्धे आल्वेरुनिमहाशयस्य भारतविवरणे ग्रन्थ एतस्योल्लेखो विद्यते। त्रयोदश-

---

१ भा०–३।४।१३; २. पद्मोत्तरखण्डे, भा० मा० २।७२–७३।
३. तत्त्वसन्दर्भे, ४८ अनु०; ४. कृष्णचरित्रे, १५[?]परि०।

शताब्द्यां बोपदेवरचितमिदं महापुराणमित्यपि एतेनैव निरस्तम् । बोपदेवो भागवतस्य "परमहंसप्रिया"नाम्नीं टीकां व्यरचयत्, तत्र भागवतपद्यान्यप्युद्धृतानि । रामानुजप्रणीतवेदान्ततत्त्वसारे भागवतस्योल्लेखो विद्यत इति डॉ० राधागोविन्दनाथेन प्रमाणितम्[1] । एकादशशताब्द्या इयं चर्चा । भण्डारकरमतमपि समीचीनं यतः सप्तमालवारकुलशेखरप्रणीतकुन्दमालायां भागवतस्य ११।२।३६ पद्यं वर्तते । भागवततात्पर्यप्रणेतॄणां मध्वाचार्याणां परमहंसप्रियाप्रणेतॄणां बोपदेवानां भावार्थदीपिकाप्रणेतॄणां श्रीधरस्वामिनां प्रवृत्तिः कदापि न स्याद् यदि बहुकालादेवास्य प्रचारः प्रसारः ख्यातिश्च न स्यात् । शङ्कराचार्यनाम्ना प्रचलिते सर्वसिद्धान्तसङ्ग्रहेऽपि वेदान्तपक्षप्रकरणे[2] भागवतस्योल्लेख इति अर्वाचीनत्वं नैतस्य सम्भवति ।

भागवतस्य खीष्टपूर्वकालरचनास्वीकारेऽपि प्रमाणाभावो नास्ति । भाषावैशिष्ट्यं छन्दोवैचित्र्यमेवैतस्य प्राचीनत्वं प्रकाशयति ।

महामहोपाध्यायहरप्रसादशास्त्रिणोक्तं यद् बोपदेवकृतटीकायां परमहंसप्रियायां भागवतस्य प्राय एकसहस्रं भाषागतप्राचीनप्रयोगं प्रदर्श्यार्षप्रयोगत्वमुद्घाटितम् । बोपदेवसामयिके हेमाद्रावपि भागवतस्यैतद्वैशिष्ट्यं स्वीकृतम् ।

द्वितीयञ्च भाषागतं वैशिष्ट्यं गद्यरीतिः । पार्जिटरमहाशयः कादम्बरीभाषानुकरणं स्वीकृत्य सप्तमशताब्द्यामेतस्य रचनां स्वीकरोति । एतदालोचनायां शास्त्रिणोक्तं यद् 'ह', 'वाव', 'व्याख्यास्यामः' इत्यादिप्रयोगबलेनावगम्यते यद् एतद्रचनासमये ब्राह्मणभाषावैशिष्ट्यमपि प्रचलितमासीत्, किमन्यत् सूत्ररीतिरपि नैवाप्रचलिता आसीत् । तथा च भागवतगद्यं ब्राह्मणपरवर्तिसाहित्यिकगद्यपूर्ववर्ति विद्यते । तस्मात् खीष्टीयद्वितीयशतक एतस्य रचना जातेत्यनुमीयते ।

स्कन्धशब्दप्रयोगश्च भागवते विद्यते । एष प्रयोगः खीष्टपूर्वं षष्ठे, पञ्चमे, चतुर्थे च शतके बौद्धगणकर्तृकः प्रचलितोऽभवत्, तथा च भागवतरचनासमये बौद्धप्रभावोऽपि भवेदेव । तस्मात् खीष्टपूर्वद्वितीयशतकाभ्यन्तर एव रचना जातेति । गौणीयवैष्णवाभिधानेऽपरिचितछन्दोवैचित्र्यप्रयोगोऽप्यविस्मरणीय एव । आर्षप्रयोगस्तु वर्तत एवातः परप्रस्तारनियमे नूतनरचनापि[3] दृश्यते—एतत्सर्वं प्राचीनत्वं परिरक्षति । सत्यमेव भागवतस्यांशविशेषपुरातनचिह्नमेवाधत्ते ।

श्रीजीवगोस्वामी भागवतरचनाकालविषये सुष्ठु समाधानं करोति । महाभारतपूर्वं संक्षिप्तभागवतस्य रचनानन्तरं संस्कारः, ततश्च युगे-युगे नवसंस्करणस्य सूत्रपात इति खीष्ट्युगपूर्वतः अष्टमशताब्दीपर्यन्तं संस्करणं नवपरिधानपरिष्कृतं भवति ।

---

१ श्रीमद्भागवतभूमिकायाम्, पृ० ८ ।

२. 'श्रीभागवतसंज्ञे पुराणे स्वपते हि सः' । (९८–९९)

३ गौडीयवैष्णवाभिधानम्, ख० १, पृ० १७०९ ।

चतुःश्लोकपरिमितं भागवतं पुरातनकालादेव प्रचारमलभत् । ख्रीष्टपूर्वकाल एवैतस्य प्रचार आसीत् । रामात्पूर्वं यथा रामायणं तथैव कृष्णात्पूर्वं श्रीमद्भागवतमित्यत्र का विप्रतिपत्तिः ?

मत्स्यपुराणे भागवतस्य द्विविधं वैशिष्ट्यं परिबृंहितम्—गायत्र्या अर्थविस्तारः, वृत्रासुरवधश्च । तद्यथा—

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं　　तद्भागवतमिष्यते ॥

इयं हि परिर्वधितरूपस्य प्रथमावस्था । भागवतगद्यांशरचनाऽपि एतत्काल एव जाता । महामहोपाध्यायहरप्रसाददृष्ट्या ख्रीष्टीयप्रथमशतकात् ख्रीष्टीयद्वितीयशतकमध्य एवासीदस्य संस्थितिः । द्वितीयचन्द्रगुप्तकाले सर्वापेक्षापरिबृंहितं संस्करणं जातमित्यनुमीयते । गुप्तधारायां परिणतोऽवतारवादो बौद्धजैनविरुद्धसनातनवैदिकसंस्कृतेः संरक्षणं च जातम् । गोब्राह्मणहितायापि तस्य प्रयास आसीत् । अत एव दशमस्कन्धे "गोसमुद्रपरिवर्द्धनमभिलक्ष्य……द्विजपशुवृद्धिकारित्" (१०।१०।१४) इत्युक्तम् । भागवतस्य चतुर्थपर्वकाले दाक्षिणात्यालवारप्रथमयुगे प्रेमभक्तिसंस्पर्शोऽपि सम्भाव्यत एव । भागवते वाराङ्गनायाः पिङ्गलाया वराङ्गनाभावोन्नीतकाले उच्चारितनिगूढभावस्य "रेमेऽनेन यथा रमा" इत्यनेन रमेवानुक्षणं तत्सङ्गे रमणं करिष्यामीति श्रीरङ्गनाथेन सह रमणाभिलाषिण्याः गोदाया एवान्तःस्थितनित्यस्पन्दितभावस्य प्रतिध्वनिः । अष्टमशताब्द्यां तन्त्राभ्युत्थानकाले आलवाराचार्यसम्प्रदायविकासवेलायामन्तिमसंस्कारः समभवत् ।

स्पष्टघोषणा शास्त्रिमहाशयानां यत् सप्तदिवसीयपाठयोग्यः संक्षिप्तभाग एवासीत् । सप्तदिवसोऽनन्तरं परीक्षितस्य मृत्युर्भवितेति अवगत्यैव भागवतपारायणतत्पर आसीत् शुकदेवः । तस्माद् धार्मिकदृष्ट्या दार्शनिकदृष्ट्यैव प्राचीनं संस्करणम् । भवतु नाम भागवतस्य प्राचीनत्वे सर्वेषामाचार्याणां सम्मतिरिति । भागवतम् एकमेवाद्वितीयं महाकवेरखण्डं सिद्धफलम् । प्रक्षिप्तमपि भागवते मधुरमिश्रणमिवापरिहार्यमेवापूर्वैव सर्वत्र सङ्गतिरिति श्रेष्ठभक्तैः रसप्रवाह एव कृत इति ।

**भागवतस्य स्थानम्—**

भागवतस्य रचनाकालस्येव स्थानविषयेऽपि महती विप्रतिपत्तिः । भागवतमुत्तरभारतस्य दानमिति प्रचारे सत्यपि Earquharमहाशयः, भण्डारकरप्रमुखा गवेषका भागवतं दक्षिणभारत एव रचितमामनन्ति । भागवतश्लोकेषु दाक्षिणात्यानामेव यशोगानम्, अन्यत्र नारायणभक्तानां विक्षिप्तरूपेण संस्थितिः; किन्तु द्राविडदेशे भक्तसमवाय एव ।

ताम्रपर्ण्याः, कावेर्याः कृतमालायाः, महापुण्याया जलं ये पिबन्ति ते वासुदेवेऽमलाशया भवन्ति। तद्यथा—

कलौ खलु भविष्यन्ति नारायणपरायणाः।
क्वचित्क्वचिन्महाराज द्रविडेषु च भूरिशः॥
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी।
कावेरी च महापुण्या प्रतीची च महानदी॥
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर।
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः॥ (११।५।३८–४०)

भण्डारकरोऽसन्दिग्धभावेन आलवाडस्यैव सङ्केतमभिवदत्येतेन। जितेन्द्रनाथवन्द्योपाध्यायो भागवतस्याष्टमस्कन्धस्य तृतीयाध्याये आलवाडस्यैव निर्देशं स्वीकरोति ग्राहनिपीडितगजेन्द्रस्तुतौ द्रविडदेशीयभक्तगोष्ठीनां कथेव। 'एकान्तिता' इति भगवत्प्रपन्नानां भक्तिरसस्यानन्दसागरे निमग्नानां भगवन्महिमाकीर्तनतत्पराणामालवाडातिरिक्तानां चर्चा नास्ति।

एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः।
अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः॥ (८।३।२०)

भक्तिदेवीकथनादेव प्रतीयते यद् भक्तेः जन्मस्थानं द्रविडदेश इति। सा द्रविडे उत्पन्ना, कर्णाटके वृद्धिं गता, महाराष्ट्रे क्वचित्क्वचित्सम्मानिता, गुर्जरे च वृद्धानन्तरं वृन्दावनं प्राप्य नवीना सुरूपा च जाता। तद्यथा—

उत्पन्ना द्रविडे साऽहं वृद्धिं कर्णाटके गता।
क्वचित्क्वचिन्महाराष्ट्रे गुर्जरे जीर्णतां गता॥
तत्र घोरकलेर्योगात् पाषण्डैः खण्डिताङ्गका।
दुर्बलाऽहं चिरं जाता पुत्राभ्यां सह मन्दताम्॥
वृन्दावनं पुनः प्राप्य नवीनेन सुरूपिणी।
जाताऽहं युवती सम्यक् प्रेष्ठरूपा तु साम्प्रतम्॥
( पद्मोत्तर-भा० मा० १।४४, ४७–४९ )

"भक्तिः परमानन्दचिन्मूर्तिः सुन्दरी कृष्णवल्लभा"।

अतो नित्या, अत आक्षरिकार्थमादाय उत्पन्ना, जाता इति न संघटते। वृन्दावनं तत्क्षेत्रं स्वरूपस्फूर्तेरादिमं धाम अत एव पुनः प्राप्य इत्युक्तमर्थात् पूर्वमपि तत्रैव स्थितिरासीत्, अतः कथं द्राविडे तदुत्पत्तिरिति। कृष्णलीलाया परमं धाम गोकुलः, मथुरा, महावनम्, अत्रैव तु भगवद्रूपेण लीलास्थानम्। अत एव भक्त्या रमणरेतीक्षेत्रे तद्दर्शनं लीलोत्सवं च अवलोकयन्ति भक्ताः।

आलवारसम्प्रदायो विष्णुभक्तः, वैकुण्ठे पार्षदत्वप्राप्तिरेव काम्या, कृष्णश्च विष्णोरवतारः, भागवतापेक्षया विष्णुपुराणस्याधिकः प्रचारः प्रसारश्च। अत्र व्यासपूजाया महत्त्वम्, तत्र च श्रीसम्प्रदाये पराशरपूजाया महत्त्वम्। तस्माद्विष्णुभक्तिप्रधानं तत्क्षेत्रम्, न कृष्णभक्तिप्रधानम्।

चतुःश्लोकात्मकं भागवतं वेदार्थं परिबृंहितमिति प्रथमं दक्षिणस्यामाविर्भूतं कृष्णजन्मपूर्वत एवेति किं वक्तुं शक्यते ? विष्णुभक्तिधारायामुत्तरपथ आगता कृष्णभक्तिधारापि मिलिता। नात्र संशयो यत् कृष्णधारया सह विष्णुभक्तिरपि वेगवती, परमेतादृशं किमपि निर्भरयोग्यं नास्ति, येन वक्तुं शक्यते दक्षिणपथः कृष्णभक्तिरुत्तरपथे आगता।

ज्ञानं वैराग्यं च पुत्रमादाय या भक्तिर्द्रविडे उत्पन्ना वृन्दावने सैव नवयौवनसम्पन्ना, पुत्रद्वयस्य जागरणं नैव जातम्। कृष्णवेण्यास्तीरे लीलाशुको बिल्वमण्डल एव भागवतप्रभावस्य प्रत्यक्षं प्रमाणम्। गोदावरीतटे श्रीचैतन्यदेवं रायरामानन्दो रसराजमहाभावात्मिकां कृष्णगोपीतत्त्वकथां श्रावितवान्। कृष्णभक्तिशाखाया विस्तारानन्तरकथा कर्णाटके वृद्धिं प्राप्ता इति यदुक्तं तत्रस्थैव तु सनातनी पञ्चदशशताब्द्याः कथा।

भवतु नाम भारते भक्तिः, भारतञ्चाखण्डम्। प्रान्तभेदकथा तु आधुनिकी। सर्वेऽपि भारतीया इत्यत्र नास्ति विवादः। भागवते दाक्षिणात्यानां दानमित्यत्र नास्ति मतभेदः। द्वादशैकादशस्कन्धे दशमस्कन्धे च दक्षिणभारतस्य महती चर्चा। यथा 'वरद', 'वरदर्षभ'। (७।१०।७)

भावं भाषां भक्तिमध्यात्मदर्शनञ्चावलोक्य भारतस्योत्तरवाहिनी दक्षिणवाहिनी नदी अत्र समवेतेति नमः श्रीराधारमणविहारिणे।

त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्र-
　संसारचक्रकदनाद् ग्रसतां प्रणीतः।
बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं
　प्रीतोऽपवर्गशरणं ह्वयसे कदा नु॥ इति।